श्रीमद्गङ्गेशोपाध्यायविरचितं

# तत्त्वचिन्तामणौ

## प्रत्यक्षखण्डम्

(प्रथमो भागः)

श्रीकामाख्यानाथतर्कवागीशेन

॥ श्रीः ॥

श्रीमद्गङ्गेशोपाध्यायविरचितं

# तत्त्वचिन्तामणौ

## प्रत्यक्षखण्डम्

श्रीमथुरानाथतर्कवागीशकृतव्याख्यया तथैव श्रीमत्पण्डित-
जयदेवकृतव्याख्यया च सङ्गृहीतोद्धरणसहितम्

( प्रथमो भागः )

कालिकातास्थ-संस्कृतमहाविद्यालयाध्यापक-
श्रीकामाख्यानाथतर्कवागीशेन
परिशोधितम्




चौखम्बा संस्कृत प्रतिष्ठान
३८ यू० ए० बंगलो रोड, जवाहरनगर
दिल्ली ११०००७

THE

# TATTVACINTĀMAṆI

OF

## GAṄGEŚA UPĀDHYĀYA

## PRATYAKṢA KHAṆḌA

With extracts from the Commentaries of :
**Shri Mathuranatha Tarkavagisha**
**&**
**Shri Jayadeva Mishra**

( Volume I )

Edited by
Pt. Kamakhyanath Tarkavagish




CHAUKHAMBA SANSKRIT PRATISHTHAN
38 U. A., Bungalow Road, Jawaharnagar
DELHI 110007

# अनुक्रमणिका ।

दुःखपङ्कनिमग्नानां जीवानां षोड़शपदार्थ-तत्त्वज्ञानद्वारा दुःखात्यन्त-विमुक्तये परमकारुणिको महर्षिर्गौतमः षोड़शपदार्थनिरूपणात्मकं तर्क-शास्त्रं प्रणिनाय । स च महर्षिः प्रत्यक्षानुमानोपमान-शब्दात्मकप्रमाणचतु-ष्टयप्रामाण्यवादी, तन्मतमवलम्ब्य श्रीमद्गङ्गेशोपाध्यायः तत्त्वचिन्तामणि-नामकग्रन्थेन तादृशप्रमाणचतुष्टयस्य प्रामाण्यं सप्रपञ्चं सोपपत्तिकञ्च व्यवस्थापितवान् । स च तार्किकविदग्धाग्रणीर्मिथिलाजनपदमलञ्चकार कस्मिन् समये कतममन्वयं मण्डयामास तद्विशेषेण नावधार्य्यते, किन्तु षड्-दर्शनटीकाकृद्वाचस्पतिमिश्रात् तस्याप्राचीनतैवेति निर्णेतुं शक्यते, यतस्तेन ग्रन्थे "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः न हि करिणि दृष्टे चीत्कारेण तमनुमिमते अनुमातारः" इति वाचस्पतिवचनयो-रविरोध इति वदता तस्मात् तस्याप्राचीनता सूचिता । स एव नव्यन्यायस्य प्रथमप्रणेता, तस्यैव पाण्डित्यबलेन न्यायदर्शनं सर्व्वत्र समादरमाससाद । तद्ग्रन्थस्य चिन्तामणिसंज्ञकत्वेन महामहोपाध्याय-श्रीजयदेवमिश्रविर-चिततद्ग्रन्थव्याख्याया आलोकनामकत्वं, महामहोपाध्याय-श्रीरुचिदत्त-विरचिततद्ग्रन्थव्याख्यायाः प्रकाशनामकत्वं, तार्किकाग्रगण्यमहामहो-पाध्याय-श्रीरघुनाथशिरोमणिविरचिततद्ग्रन्थव्याख्याया दीधितिनामकत्वञ्च युक्तमेव । तादृशव्याख्यात्रयस्य उत्कर्षवत्त्वेऽपि अतिसंक्षिप्तत्वात् महामहो-पाध्याय-श्रीमथुरानाथ-तर्कवागीशेन रहस्यनामकातिविशदव्याख्यया तद्-ग्रन्थतात्पर्य्यमुपवर्णितं । अस्मिन् तत्त्वचिन्तामणिनामकग्रन्थे चत्वारः परि-च्छेदाः सन्ति, प्रथमः प्रत्यक्षपरिच्छेदः, द्वितीयः अनुमानपरिच्छेदः, तृतीय-उपमानपरिच्छेदः, चतुर्थः शब्दपरिच्छेदः, प्रथमपरिच्छेदे प्रत्यक्षप्रमितेः जनकं कारणं प्रामाण्यञ्च विशेषेणोपवर्णितं, द्वितीयपरिच्छेदे अनुमितेर्लक्षणं कारणं प्रामाण्यञ्च विशेषेणोपवर्णितं, ईश्वरानुमानप्रणाली विशेषेणोपवर्णिता

च। तृतीयपरिच्छेदे उपमितेर्लक्षणं कारणं प्रामाण्यञ्च विशेषेणोपवर्णितं, चतुर्थपरिच्छेदे शाब्दप्रमितेर्लक्षणं कारणं प्रामाण्यञ्च विशेषेणोपवर्णितं। द्वितीयानुमानपरिच्छेदस्य केचिदंशाः अस्मत्प्रदेशे पठन-पाठनयोः प्रचरन्ति, सुतरां पठन-पाठनाभावात् उक्तग्रन्थोलुप्तकल्प एव जातः। तस्मिन्ममुपादेयं ग्रन्थं लुप्तकल्पमालोचयद्भिः एसियाटीक-सोसाइटी-समाजविद्भिः परिशोधनपूर्व्वकमुद्रणेनास्य ग्रन्थस्य प्रकाशार्थमहमाज्ञप्तः, मयाप्यस्य संस्कारविषये यावान् परिश्रमः समुचितः तावान् अकारि तथापि भ्रमप्रमादवशात् स्खलितं सन्तः संस्कुर्व्वन्तु। अतिप्रामाणिकालोकप्रभृतिव्याख्यापुस्तकानां सुलभत्वेऽपि अतिविशदत्वात् सुगमत्वात् सर्व्वैरन्तेवासिभिः विशेषेणादृतत्वाच्च महामहोपाध्याय-श्रीमथुरानाथ-तर्कवागीशविरचितरहस्यनामकव्याख्यया सह मूलपुस्तकमिदं मुद्रापितं। प्रत्यक्षपरिच्छेदस्य समवायवादे अनुपलब्धिप्रामाण्यवादे अभाववादे प्रत्यक्षकारणवादे मनोऽणुत्ववादे अनुव्यवसायवादे निर्व्विकल्पकवादे अनुमानपरिच्छेदस्य ईश्वरानुमानवादे शब्दपरिच्छेदस्य शक्तिवादे समासवादे आख्यातवादे धातुवादे उपसर्गवादे प्रमाणचतुष्टयप्रामाण्यवादे च महामहोपाध्याय-श्रीमथुरानाथ-तर्कवागीशकृतरहस्यनामकव्याख्यापुस्तकस्याप्राप्तत्वात् तत्र तत्र मूलविभागेषु महामहोपाध्याय-श्रीजयदेवमिश्रविरचितालोकनामकव्याख्यापुस्तकं सन्निवेशितं। उपमानपरिच्छेदे रहस्यनामकव्याख्यापुस्तकस्यालोकनामकव्याख्यापुस्तकस्य चाप्राप्तत्वात् तत्र विभागे महामहोपाध्याय-श्रीरुद्रन्यायवाचस्पतिविरचितदीपन्याख्यव्याख्यापुस्तकं सन्निवेशितं। शब्दपरिच्छेदस्य उच्छन्नप्रच्छन्नवादे विधिवादे अपूर्व्ववादे शक्तिवादे समासवादे आख्यातवादे धातुवादे उपसर्गवादे प्रमाणचतुष्टयप्रामाण्यवादे च महामहोपाध्याय-श्रीरुचिदत्तकृतप्रकाशनामकव्याख्यायां अभिनवपदार्थाविष्कारदर्शनात् तत्र तत्र विभागे कुत्र-कुत्रचित् रहस्यनामकव्याख्याया अधस्तात् कुत्र-कुत्रचिच्च आलोकनामकव्याख्याया अधस्तात् रुचिदत्तकृतप्रकाशनामकव्याख्यानमपि सन्निवेशितं। यानि आदर्शपुस्तकान्यवलम्ब्य मयैतत्परिशोधनं कृतं तेषामेकं नवद्वीप-

निवासि-पूज्यपाद-महामहोपाध्याय-श्रीभुवनमोहनविद्यारत्नमहोदयसन्निधानादपरं नवद्वीपनिवासि-श्रीहरिनाथतर्कसिद्धान्तमहोदयसन्निधानादितरत् पूर्व्वस्थलीनिवासि-महामहोपाध्याय-श्रीयुक्तकृष्णनाथन्यायपञ्चाननमहोदयसन्निधानादपरं खाँटपुरनिवासि-पूज्यपाद-श्रीश्यामापदन्यायभूषणमहोदयसन्निधानादपरमपि राजकीयसंस्कृतविद्यामन्दिरात् प्राप्तं, एतत् पुस्तकपञ्चकं सम्पूर्णं परिशुद्धञ्च। अन्यच्च यत् सोसाइटीसमाजात् लब्धं तदसम्पूर्णं। सर्व्वं षड़ादर्शपुस्तकानि एतत्पुस्तकपरिशोधने सहायत्वेन लब्धानि। तत्त्वचिन्तामण्यन्तर्गताख्यातवादापेक्षया समुज्ज्वलत्वात् सर्व्वैरन्तेवासिभिर्विशेषेण समादृतत्वाच्च महामहोपाध्याय-तार्किकाग्रगण्य-श्रीरघुनाथशिरोमणिभट्टाचार्य्यविरचित आख्यातवादः तत्त्वचिन्तामण्यन्तर्गतशब्दपरिच्छेदे नञ्पदार्थविचाराभावात् उक्तशिरोमणिभट्टाचार्य्यकृतनञ्वादस्य तत्त्वचिन्तामणिग्रन्थे परिशिष्टभावेन मुद्रापित इत्यलं पल्लवितेन।

श्रीकामाख्यानाथशर्म्मणः।

# तत्त्वचिन्तामणौ प्रत्यक्षखण्डे सूचीपत्रम् ।


| विषयः । | पृष्ठा । |
|---|---|
| मङ्गलवादपूर्व्वपक्षः ... ... ... ... ... ... ... | ५ |
| मङ्गलवादसिद्धान्तः ... ... ... ... ... ... ... | ८८ |
| प्रामाण्यवादपूर्व्वपक्षः ... ... ... ... ... ... ... | ११४ |
| प्रामाण्यवादसिद्धान्तः... ... ... ... ... ... ... | १८६ |
| प्रामाण्यवादे उत्पत्तिवादपूर्व्वपक्षः ... ... ... ... ... | २८७ |
| प्रामाण्यवादे उत्पत्तिवादसिद्धान्तः ... ... ... ... ... | ३०७ |
| प्रमालक्षणपूर्व्वपक्षः ... ... ... ... ... ... ... | ३७२ |
| प्रमालक्षणसिद्धान्तः ... ... ... ... ... ... ... | ४०१ |
| अन्यथाख्यातिवादपूर्व्वपक्षः ... ... ... ... ... ... | ४३० |
| अन्यथाख्यातिवादसिद्धान्तः ... ... ... ... ... ... | ४७७ |
| सन्निकर्षवादे प्रत्यक्षलक्षणम्... ... ... ... ... ... | ५३८ |
| सन्निकर्षवादः ... ... ... ... ... ... ... ... | ५७२ |
| समवायवादपूर्व्वपक्षः ... ... ... ... ... ... ... | ६४० |
| समवायवादसिद्धान्तः ... ... ... ... ... ... ... | ६४८ |
| अनुपलब्धप्रामाण्यवादः ... ... ... ... ... ... | ६७२ |
| अभाववादपूर्व्वपक्षः ... ... ... ... ... ... ... | ६६३ |
| अभाववादसिद्धान्तः ... ... ... ... ... ... ... | ७०७ |
| प्रत्यक्षकारणवादः ... ... ... ... ... ... ... | ७२० |
| मनोऽणुत्ववादपूर्व्वपक्षः ... ... ... ... ... ... | ७६२ |
| मनोऽणुत्ववादसिद्धान्तः ... ... ... ... ... ... | ७७१ |
| अनुव्यवसायवादपूर्व्वपक्षः ... ... ... ... ... ... | ७८४ |
| अनुव्यवसायवादसिद्धान्तः ... ... ... ... ... ... | ७६३ |
| निर्व्विकल्पकवादपूर्व्वपक्षः ... ... ... ... ... ... | ८०६ |
| निर्व्विकल्पकवादसिद्धान्तः ... ... ... ... ... ... | ८१७ |
| सविकल्पकवादः ... ... ... ... ... ... ... | ८३६ |

# शुद्धिपत्रम्।

| अशुद्धं | | शुद्धं | | पृष्ठं | | पङ्क्तिः |
|---|---|---|---|---|---|---|
| स्वर्ग | ... | सर्ग | ... | १ | ... | ४ |
| न्योन्याश्येया | ... | न्योन्याश्रया | ... | ८ | ... | १२ |
| जननाड़ना | ... | जलताड़ना | ... | ९।१०।११ | ... | १४।१०।२ |
| .न्यत्व | ... | जन्यत्व | ... | १५ | ... | १० |
| 'शिष्टेति' | ... | 'शिष्टेति, | ... | १७ | ... | ८ |
| आरब्द | ... | आरब्ध | ... | २० | ... | १६ |
| भिद्याता | ... | भिधाता | ... | २२ | ... | ११ |
| कारणत्त्वा- | ... | कारणत्वा- | ... | २२ | ... | १२ |
| विषयविषया- | ... | विषयविषया- | ... | २४ | ... | ११ |
| अन्य | ... | जन्य | ... | २६ | ... | १४ |
| नत्प्रति | ... | सत्प्रति | ... | २९ | ... | ६ |
| सुच | ... | सूच | ... | २९ | ... | १० |
| निव्वाद्यात् | ... | निर्व्वाद्यात् | ... | ३१ | ... | २ |
| व्यपारः | ... | व्यापारः | ... | ३१ | ... | ४ |
| पत्या | ... | पथ्या | ... | ३५ | ... | १५ |
| इत्युद्देश्य | ... | इत्युद्दिश्य | ... | ३५ | ... | १७ |
| कल्पिना | ... | कल्पना | ... | ३६ | ... | १९ |
| नथात्वान | ... | तथात्वात् | ... | ४० | ... | १० |
| फलखिति | ... | फलमिति | ... | ४८ | ... | ८ |
| प्रक्क्षुते | ... | प्रक्कन्ते | ... | ५२ | ... | १५ |
| तध्वंस | ... | तद्धंस | ... | ५७ | ... | ६ |
| सिद्धतः | ... | सिध्यतः | ... | ५८ | ... | १० |
| मार्थ्यता | ... | कार्य्यता | ... | ६० | ... | १६ |

| अशुद्धं | शुद्धं | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| प्रधान | ... प्रधाने | ... ६३ | ... १२ |
| एकम्मादपि | ... एकस्मादपि | ... ६७ | ... १५ |
| वैशिष्ठ्यस्य | ... वैशिष्ट्यस्य | ... ७१ | ... १९ |
| सर्गोत्पत्त्या | ... सर्गोत्पत्त्या | ... ७२ | ... १८ |
| तदुपजिवि | ... तदुपजीवि | ... ७९ | ... १२ |
| एल्लवितेन | ... पल्लवितेन | ... ८२ | ... ११ |
| नुपघायक | ... नुपधायक | ... ८५ | ... ११ |
| गोमर | ... गोचर | ... ९० | ... १० |
| चिवकाला | ... चिरकाला | ... ९० | ... १५ |
| दन्नय | ... दन्वय | ... ९० | ... १८ |
| प्रकारणेष | ... प्रकारेणैव | ... ९९ | ... १३ |
| मङ्गल | ... मङ्गला | ... १०१ | ... १९ |
| वदना | ... वन्दना | ... १०७ | ... ४ |
| तीर्थिकस्यपीति- | ... तीर्थिकस्यापीति | ... ११२ | ... १७ |
| विनेपि | ... विनापि | ... ११७ | ... २२ |
| हेदुल | ... हेतुल | ... १२३ | ... १४ |
| भावात | ... भावात् | ... १२३ | ... २२ |
| प्रामाला- | ... प्रमाला- | ... १३४ | ... १९ |
| यद्विशेषत | ... यद्विशेषण | ... १३५ | ... १९ |
| विशेषणसम्बन्धेन | ... विशेषसम्बन्धेन | ... १३६ | ... १० |
| प्रामाण्यभाना | ... प्रामाण्याभाना | ... १३६ | ... २३ |
| मात्रस्य | ... मात्रस्य | ... १४२ | ... ३ |
| प्रामाण्य पचीक्रते | ... प्रामाण्ये पचीक्रते | ... १४३ | ... १९ |
| विशिष्ठ- | ... विशिष्ट- | ... १५७ | ... ५ |
| वैशिष्ठ्य | ... वैशिष्ट्य | ... १६१ | ... २३ |
| स्यान्यनु | ... स्याप्यनु | ... १६६ | ... १४ |
| रुप | ... रूप | ... १६८ | ... ५ |

| अशुद्धं | शुद्धं | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| वच्छंक | ... वच्छेदक | ... १७२ | ... ४ |
| रूपनायक | ... रूपनायक | ... १७६ | ... २१ |
| विशंव्यक | ... विशेष्यक | ... १८४ | ... ७ |
| चतुर्था | ... चतुर्थी | ... १८५ | ... २ |
| सौकार्य्यात् | ... सौकर्य्यात् | ... १८५ | ... ८ |
| न्तर्भावेन | ... न्तर्भावेण | ... १८६ | ... २२ |
| निश्चयात्मककत्वे | ... निश्चयात्मकत्वे | ... १९१ | ... १४ |
| प्टशृङ्खल | ... च्छृङ्खल | ... १९२ | ... १।६।१ |
| तथापीद | ... तथापीदं | ... १९३ | ... १८ |
| संशयस्य । न | ... संशयस्य न | ... १९३ | ... १९ |
| न्यायनय | ... न्यायनये | ... १९३ | ... १९ |
| भावेभावो | ... भावाभावो | ... २०३ | ... २० |
| मिद्न्द्व | ... मिद्न्त्व | ... २०९ | ... ८ |
| विपर्य्यस्य | ... विपर्य्ययस्य | ... २१० | ... २ |
| उद्भावा | ... तद्भावा | ... २२६ | ... १३ |
| निष्पकारक | ... निष्प्रकारक | ... २२२ | ... १७ |
| निर्व्विकल्पत्वं | ... निर्व्विकल्पकत्वं | ... २२२ | ... २० |
| प्रमाण्यभाने | ... प्रामाण्यभाने | ... २३३ | ... १४ |
| चेत | ... चेत | ... २३२ | ... २२ |
| ग्राह्यन्वात् | ... ग्राह्यत्वात् | ... २३५ | ... २ |
| प्रत्यक | ... प्रत्येक | ... २३९ | ... १४ |
| चाननौन्यायेन | ... चालनौन्यायेन | ... २४१ | ... ११ |
| संश्रयस्यार्थं | ... संशयस्यार्थं | ... २४४ | ... १९ |
| प्रामण्यं | ... प्रामाण्यं | ... २५१ | ... ११ |
| लाघव | ... लाघवा | ... २५१ | ... १२ |
| शिशेषण | ... विशेषण | ... २५५ | ... १४ |
| द्विल्यन | ... दि्त्यत | ... २६२ | ... २० |

| अशुद्धं | | शुद्धं | | पृष्ठं | | पङ्क्तिः |
|---|---|---|---|---|---|---|
| विरहाच्च | ... | विरहाच्च | ... | २६४ | ... | १६ |
| समर्थ्य | ... | सामर्थ्य | ... | २७० | ... | ५ |
| नुमित्युर- | ... | नुमित्यनन्तर- | ... | २८४ | ... | ११ |
| नुसारण | ... | नुसरण | ... | २८४ | ... | १२ |
| ग्रन्थकृत | ... | ग्रन्थकृतै | ... | २८६ | ... | ११ |
| वैचित्यात् | ... | वैचित्र्यात् | ... | २८८ | ... | ४ |
| गुणाद्दोष- | ... | गुणद्दोष | ... | २८८ | ... | ५ |
| एतेन | ... | एतेन | ... | २९६ | ... | २ |
| दृष्टान्तत्व | ... | दृष्टान्तत्वं | ... | २९८ | ... | १ |
| प्रतिबन्धंककानुभव | ... | प्रतिबन्धकानुभव | ... | ३०२ | ... | १६ |
| व्यभिचार- | ... | वभिचार- | ... | ३०२ | ... | २० |
| स्थाणतया | ... | स्थाणुतया | ... | ३०३ | ... | ४ |
| सामेग्री | ... | सामग्री | ... | ३०३ | ... | १० |
| जनत्वं | ... | जनकत्वं | ... | ३०६ | ... | १ |
| व्यक्तोरेव | ... | व्यक्त्योरेव | ... | ३०८ | ... | ७ |
| चाक्षुष | ... | चाक्षुष | ... | ३१२ | ... | २ |
| व्यावर्त्यत्वात् | ... | व्यावर्त्यत्वात् | ... | ३१५ | ... | १ |
| भानाङ्गीकरा- | ... | भानाङ्गीकारा- | ... | ३१७ | ... | १५ |
| सदथ | ... | सदर्थं | ... | ३१८ | ... | १ |
| स्यात् | ... | स्यात् | ... | ३२० | ... | ७ |
| दर्शनमेव | ... | दर्शनमेव | ... | ३२४ | ... | ११ |
| असत्त्वेन | ... | असत्त्वेन | ... | ३२६ | ... | १५ |
| दर्शनमेव | ... | दर्शनमेव | ... | ३२८ | ... | १ |
| केवलान्वायनि | ... | केवलान्वयिनि | ... | ३३३ | ... | १ |
| लिङ्गोद्धित | ... | लिङ्गोपद्धित | ... | ३३५ | ... | ८ |
| दोषात | ... | दोषात् | ... | ३३५ | ... | १० |
| तज्जन्य | ... | तज्जन्य | ... | ३५० | ... | ९ |

| अशुद्धं | शुद्धं | पृष्ठं | पङ्क्तिः |
| --- | --- | --- | --- |
| वेदाथ | वेदार्थं | २५२ | ९ |
| स्तात्पय | स्तात्पर्य्यं | २५४ | ७ |
| अप्रमाण्यस्व | अप्रामाण्यस्य | २५६ | १० |
| दूषयिष्यमाण | दूषयिष्यमाण | २५६ | १२ |
| किन्त्वति | किन्त्विति | २५८ | ११ |
| सामथ्या | सामर्थ्या | २५९ | २ |
| ज्ञामात्रेति | ज्ञानमात्रेति | २५९ | १८ |
| मित्यर्थ, | मित्यर्थः, | २६२ | २० |
| प्रथायां | प्रमायां | २७६ | १८ |
| तत्ववाप्ति | तत्त्वाव्याप्ति | २८३ | १९ |
| धमाप्रकार- | धर्माप्रकार- | २८५ | २ |
| स्वपतो | स्वरूपतो | २८८ | १९ |
| व्याधिकरणेति | व्यधिकरणेति | २८९ | ५ |
| वैशिष्ठ्यांश | वैशिष्ट्यांश | २९८ | ११ |
| वैशिष्ठ्यस्या- | वैशिष्ट्यस्या- | २९८ | ११ |
| सत्तावान | सत्तावान् | ४०४ | ९ |
| ववगाहेते | ववगाहते | ४१२ | १०।१२ |
| मर्थः | मर्थः | ४१४ | २१ |
| धिकर्णं | धिकरण | ४२४ | १८ |
| वद्भूतल | वद्भूतल | ४२६ | १७ |
| प्रेद्धं | ग्रंद्धं | ४२६ | १२ |
| हनि | हत्ति | ४३२ | २ |
| पदापादानं | पदोपादानं | ४३५ | १५ |
| रच्छिन्न | वच्छिन्न | ४४८ | १५ |
| भेंदाग्रहस्य | भेंदाग्रहस्य | ४४८ | १६ |
| प्रत्यक्षेण | प्रत्यक्षेण | ४५८ | १० |
| एक भेदा | एकभेदा | ४५९ | ५ |

| अशुद्धं | शुद्धं | पृष्ठं | पङ्क्तिः |
| --- | --- | --- | --- |
| ख्यातन्त्र्य | स्वातन्त्र्य | ४५९ | ६ |
| भ्रमस्य | भ्रमस्य | ४६० | ६ |
| दसुमिनो | दनुमिनो | ४६२ | ११ |
| थथा | यथा | ४७२ | ७ |
| प्राकार | प्रकार | ४७४ | ६ |
| नन दृष्टान्तस्य | न दृष्टान्तस्य | ४७४ | १५ |
| गुगत्व | गुणत्व | ४७४ | १६ |
| पदानक | पादानक | ४७७ | ७ |
| वघ्यककला- | वघ्यकला- | ४७९ | २ |
| व्यवस्ताप्यमान | व्यवस्थाप्यमान | ४८० | १३ |
| निधर्म्मिता | निर्धर्म्मिता | ४८१ | २।११ |
| मननयासिद्ध | मनन्यथासिद्ध | ४८३ | ६ |
| रजोतोपादनक | रजतोपादानक | ४८५ | ५ |
| कदाचिद्दा | कदाचिदिष्टा | ४८७ | ८ |
| सासग्रेग्रा | सामग्रेग्रा | ४८८ | २ |
| रजत-रङ्गया | रजत-रङ्गयो | ४८८ | १५ |
| राम-द्वेगयो | राग-द्वेषयो | ४८८ | १७ |
| नित्त्या | निष्टत्त्या | ४८८ | १९ |
| तत | तत् | ४८८ | २१ |
| गोर | गोचर | ४८९ | ९ |
| संपयः | संशयः | ४९३ | १० |
| दित्तितया | दिष्टत्तितया | ४९५ | ११ |
| पुरोवत्ति | पुरोवर्त्ति | ४९८ | २ |
| सम्बन्धे | सम्बन्धेन | ५०० | ९ |
| तद्वत्ति | तद्वृत्ति | ५०२ | २१ |
| विपिष्ट | विशिष्ट | ५०७ | १७ |
| मवै | मर्वं | ५०९ | ३ |

| अशुद्धं | | शुद्धं | | पृष्ठं | | पङ्क्तिः |
|---|---|---|---|---|---|---|
| काय्या | ... | कार्य्या | ... | ५१० | ... | २ |
| स्वरूपासिद्धे: | ... | स्वरूपासिद्धेः | ... | ५१० | ... | १२ |
| असंसगा | ... | असंसर्गा | ... | ५१४ | ... | ५ |
| संसगस्य | ... | संसर्गस्य | ... | ५१५ | ... | ४ |
| तन्नये | ... | तन्नये | ... | ५२० | ... | १७ |
| विधानत्यित | ... | विधानमित्यत | ... | ५२२ | ... | १७ |
| रज्जु | ... | रज्ज | ... | ५२२ | ... | ९ |
| जन्यस्यव | ... | जन्यस्यैव | ... | ५२४ | ... | १९ |
| संन्निकर्षात् | ... | सन्निकर्षात् | ... | ५२५ | ... | २ |
| मेवेभयच | ... | मेवोभयच | ... | ५२५ | ... | ८ |
| स्मृतेवा | ... | स्मृतेर्वा | ... | ५२६ | ... | २ |
| सौकार्य्या | ... | सौकर्य्या | ... | ५२७ | ... | २१ |
| वसायस्य | ... | व्यवसायस्य | ... | ५३० | ... | १० |
| मित्यौत्सगिक | ... | मित्यौत्सर्गिक | ... | ५३४ | ... | २ |
| विशेषदशना | ... | विशेषदर्शना | ... | ५३४ | ... | ६ |
| प्रामाण्य | ... | प्रामाण्ये | ... | ५३४ | ... | ७ |
| विषयत्वपि | ... | विषयत्वेपि | ... | ५३६ | ... | ४ |
| वधिव्याप्ति | ... | वतिव्याप्ति | ... | ५६० | ... | ७ |
| भिशेषण | ... | विशेषण | ... | ५६७ | ... | १८ |
| समवायनेति | ... | समवायेनेति | ... | ५७३ | ... | ८ |
| उद्भत | ... | उद्भूत | ... | ५८७ | ... | ६ |
| स्वमवायस्य | ... | स्वसमवायस्य | ... | ५३८ | ... | ५ |
| बुद्धेजाति | ... | बुद्धेर्जाति | ... | ६०० | ... | ३ |
| तीन्द्रियत्वन | ... | तीन्द्रियत्वेन | ... | ६०२ | ... | २ |
| तन्मत्ते | ... | तन्मते | ... | ६०२ | ... | ५ |
| यकेक | ... | येकैक | ... | ६०३ | ... | २ |
| वपक | ... | व्यापक | ... | ६०७ | ... | ६ |

| अशुद्धं | | शुद्धं | | पृष्ठं | | पङ्क्तिः |
|---|---|---|---|---|---|---|
| शङ्कर | ... | सङ्कर | ... | ६१० | ... | १० |
| सिद्ध | ... | सिद्धे | ... | ६१२ | ... | ५ |
| च्छेदक | ... | वच्छेदक | ... | ६१३ | ... | ११ |
| निर्वद्धा | ... | निर्वाद्धा | ... | ६१५ | ... | १६ |
| नोत्पादक | ... | नोत्पादक | ... | ६१९ | ... | ४ |
| शब्द | ... | शब्दे | ... | ६२० | ... | ८ |
| सयोगा | ... | संयोगा | ... | ६३१ | ... | ६ |
| मन्नाना | ... | मनन्नाना | ... | ६३१ | ... | ११ |
| त्यस्नि | ... | मित्यु | ... | ६७० | ... | १३ |
| अनुपश्च्या | ... | अनुपलभ्या | ... | ६७९ | ... | २ |
| दता | ... | दतो | ... | ६८३ | ... | ११ |
| प्रतिती | ... | प्रतीति | ... | ७०१ | ... | १५ |
| व्युत्पति | ... | व्युत्पत्ति | ... | ७११ | ... | २ |
| सामथ्यात् | ... | सामर्थ्यात् | ... | ७१६ | ... | ४ |
| शून्यत्व | ... | शून्यत्व | ... | ७२५ | ... | १८ |
| कमज | ... | कर्मज | ... | ७२६ | ... | १४ |
| स्वाश | ... | स्वांशं | ... | ७२७ | ... | ५ |
| नोद्भुत | ... | नोद्भूत | ... | ७३० | ... | ५ |
| कमणां | ... | कर्मणां | ... | ७३७ | ... | ३ |
| उद्भुत | ... | उद्भूत | ... | ७३९ | ... | १५ |
| प्रभावत | ... | प्रभावत् | ... | ७४३ | ... | १६ |
| नैमित्तीक | ... | नैमित्तिक | ... | ७५३ | ... | १७ |
| चच | ... | चक्षु | ... | ७७३ | ... | ९ |
| अनुमीनो | ... | अनुमिनो | ... | ८०८ | ... | २ |

## तत्त्वचिन्तामणिकार-तत्त्वचिन्तामणिटीकाकारधृत-श्लोकानां अकारादिक्रमेण प्रतीकसूची ।

### प्रत्यक्षखण्डस्य ।


प्रतीकः ।

अ ।

अङ्गानि वेदाश्चत्वारः ११५ । ५ ॥

अन्यस्य ह्यन्यथा भानं ४६८ । १ ॥

आ ।

आयुर्वेदो धनुर्वेदः ११५ । ७ ॥

इ ।

इष्टे पुंसवने चैव ४९ । १७ ।

ओ ।

ओङ्कारश्चाथशब्दश्च १०२ । ५ ॥

न ।

नित्य-नैमित्तिकैश्चैव ९ । १५ ॥

निष्फलानि च कर्म्माणि ९ । १७ ॥

प ।

प्रतिमन्वन्तरञ्चैषा ३४४ । १९ ॥

प्रसक्तप्रतिषेधात्मा ४६५ । १ ॥

म ।

मङ्गलाचारयुक्तानां १०१ । ५ ॥

य ।

यस्मिन् देशे य आचारः १११ । ४ ॥

व ।

विशिखो व्युपवीतश्च २२ । १८ ॥
वृथा चेष्टां न कुर्वीत ६ । १७ ॥

स ।

संवत्सरश्चैकमपि ३७ १४ ॥
सदोपवीतिना भाव्यं २२ । १९ ॥
सन्निहितरजतसकले ४७५ । ८ ॥
साकारपातादसतो न भानात् ४७४ । १ ॥

---

## तत्त्वचिन्तामणिप्रबन्धकारोल्लिखित-तट्टीकाकारोल्लिखितानां ग्रन्थकारनाम्नां अकारादिक्रमेण सूची।

### प्रत्यक्षखण्डस्य।

ग्रन्थकर्त्तृनामानि।


उ।

उपाध्यायः १७ । १५ ।

ग।

गुरुः ३ । १ ॥ ११७ । १४ ॥ १२६ । १० ॥ १३७ । १३ ॥ १४५ । १४ ॥ १६४ । ३ ॥ १९२ । १६ ॥

द।

दीधितिकृत् ११५ । १४ ॥ १३१ । १८ ॥

प।

प्राभाकरः ३५६ । १ ॥ ४४८ । ४ ॥ ५५६ । १ ॥

प्राभाकरनव्यः ४९४ । २० ॥

प्राभाकरैकदेशी ५१२ । १ ॥

ब।

बौद्धः १०९ । १ ॥

भ।

भट्टः ११७ । १५ ॥ १२६ । १४ ॥

भट्टाचार्य्यः १६६ । २२ ॥

भट्टाचार्य्यानुयायी ४८६ । १९ ॥

## म ।

मनुः ११० । ३ ॥

मिश्रः ११७ । १५ ॥ १२६ । १२ । १९६ । ७ ॥ ४२० । ७ ॥ ६०५ । १९ ॥
६३७ । ११ ॥

मिश्रानुयायी ४७९ । ४ ॥ ४८३ ।

मीमांसकः ५ । ११ ॥ १४ । १९ ॥ २२ । ३ ॥ ३० । १७ ॥ ४० । ११ ॥
४८ । १० ॥ ३६९ । १८ ॥

मीमांसकैकदेशी ६० । १९ ॥ १२६ । ४ ॥ १६९ । १४ ॥ ३६६ । १४ ॥

मीमांसकनव्यः ३६९ । १५ ॥

## स ।

सम्प्रदायवित् ७३९ । १ ॥

साम्प्रदायिकः १३४ । १६ ॥


---

# तत्त्वचिन्तामणिकार-तट्टीकाकारोल्लिखितग्रन्थनाम्नां अकारादिक्रमेण सूची ।



## प्रत्यक्षखण्डस्य ।

ग्रन्थनाम ।

### भ ।

भारतं ११३ । १५ ॥

### म ।

मीमांसा ३५४ । १ ॥ ३५५ । ४ ॥

### व ।

वेदः ११ । ४ ॥ १६ । ७ ॥ १७ । १ ॥ ५१ । ४ ॥ ५४ । १ ॥ ५५ । २ ॥ ५६ । १९ ॥ ५९ । २ ॥ ७६ । २ ॥ ८२ । ७ ॥ ९१ । २ ॥ ९९ । ४ ॥ १०० । २ ॥ १०६ । २ ॥ १०९ । २ ॥ ३४४ । ५ ॥ ३४५ । ८ ॥ ३५३ । ४ ॥ ३५४ । ३ ॥ ३५५ । १ ॥

### श ।

श्रुतिः १५ । १ ॥ १६ । २ ॥ ६९ । ६ ॥ ८४ । ३ ॥ ८६ । १ ॥

### स ।

स्मृतिः ११३ । १ ॥

---

## तत्त्वचिन्तामणिकारोल्लिखितानां तट्टीकाकारोल्लिखितानाञ्च वैदिकशब्दानां अकारादिक्रमेण सूची ।

### प्रत्यक्षखण्डस्य ।

वैदिकशब्दः ।

#### अ ।

अपूर्वं २१ । १ ॥ २२ । ३ ॥ ३० । ७ ॥ ३१ । ५ ॥ ३६ । १ ॥ ५० । २ ॥ ५१ । ७ ॥ ५३ । १६ ॥ ५४ । ६ ॥ ५५ । १५ ॥ ६२ । २० ॥ ६३ । १९ ॥ ६९ । १३ ॥

अश्वमेधः ५३ । १८ ॥ ६७ । १८ ॥ ६८ । ५ ॥ ७१ । ८ ॥

#### आ ।

आग्नेयाष्टाकपालं २७ । १४ ॥

आचारः २६ । १ ॥

आरः २७ । २ ॥ २९ । ११ ॥

#### इ ।

इज्या ४३ । १ ॥ ४६ । १ ॥ ४९ । २३ ॥

इन्द्रवाहुः २८ । १ ॥ २९ । ११ ॥

इष्टिः ४३ । १२ ॥ ६२ । १ ॥

#### क ।

कारीरी २८ । १२ ॥ ६० । २ ॥ ६४ । ४ ॥ ७२ । ७ ॥

कृष्णलः ४४ । ६ ॥

ग ।

गृहस्थः २७ । २ ॥ २९ ।

च ।

चरुः २७ । १४ ॥ ६१ । ५ ॥

द ।

दक्षिणा २९ । १६ ॥ ३० । ७ ॥ ५३ । १२ ॥

दर्शः ९ । २ ॥ २२ । १२ ॥ २३ । १३ ॥ २६ । २ ॥ २७ । १३ ॥ ४३ । १ ॥ ६७ । १५ ॥ ७० । ८ ॥ ९४ । ३ ॥ ९५ । १० ॥

दर्शपौर्णमासः २७ । १५ ॥ ६१ । ५ ॥

दुरितं ३१ । ४ ॥ ३६ । ३ ॥ ४० । १ ॥ ५३ । २ ॥ ५४ । १ ॥ ५६ । १ ॥ ५७ । ७ ॥ ६५ । ३ ॥ ७५ । १ ॥

प ।

परमापूर्व्वं २१ । ७ ॥ २२ । ५ ॥ ५५ । १२ ॥

पायसं २८ । १ ॥

पुत्रेष्टिः २८ । १२ ॥ ३१ । १७ ॥ ६६ । २ ॥ ६७ । १ ॥

पुरोडाशः ६७ । १८ ॥

प्रयाजः १९ । ६ ॥ २१ । ६ ॥ २३ । १३ ॥ ३१ । ४ ॥

प्रायश्चित्तं २१ । १८ ॥ २२ । १ ॥ ३६ । ४ ॥ ३८ । १० ॥ ४१ । ६ ॥ ९४ । १३ ॥ ९८ । ५ ॥

य ।

यागः ५२ । २ ॥ ६८ । १२ ॥ ७० । ११ ॥ ७१ । ११ ॥ ७२ । ६ ॥

व ।

वाजपेयः ६७ । १९ ॥ ६८ । ५ ॥

विधिः २१ । ११ ॥ ५६ । ११ ॥ ७१ । १ ॥ ७२ । १ ॥

विश्वजित् ९।४॥२८।३।३०।७॥

व्रीहिः ४४।८॥

श।

श्येनः १८।११॥६३।१०॥

श्राद्धं १८।१२॥४६।५॥४९।१८॥

स।

स्फ्यः ४३।१॥४६।१२॥४७।३।४८।६॥

स्वर्गः १३।१२॥१४।१७॥२१।६॥२२।९॥२८।३॥२९।२१॥
६७।१९॥७०।८॥८९।३॥३४४।३॥

---

# अकारादिक्रमेण विषयसूची ।



## तत्त्वचिन्तामणौ प्रत्यक्षखण्डस्य ।

विषयः ।

### अ ।


अनुद्भूतत्वस्य नानाजातित्वव्यवस्थापनं ७२५ । ७ ॥

अनुद्भूतत्वाभावकूटस्य महत्त्वस्य च प्रत्यक्षत्वे प्रयोजकत्व-
निरूपणं ७२५ । ११ ॥

अनुपलब्धिप्रामाण्ये बाधिका युक्तिः ६८५ । ५ ॥

अनुपलब्धिप्रामाण्ये साधिका युक्तिः ६७३ । १ ॥

अन्यथाख्यातिविचारावतरणं ४३० । १ ॥

अन्यथाख्यातिविचारे प्राभाकरमतं ४४८ । ४ ॥

अन्यथाख्यातौ प्रमाणव्यवस्थापनं ४३९ । ३ ॥

अन्यथाख्यातौ प्रमाणाभावशङ्का ४३१ । १ ॥

अन्यथाख्यातौ प्राभाकरादीनां मतखण्डनं ५१८ । ७ ॥

अन्यथाख्यातौ प्राभाकरैकदेशिनां मतं ५१२ । १ ॥

अन्यथाख्यातौ सिद्धान्तव्यवस्थापनं ४७७ । १ ॥

अभावप्रत्यक्षे विशेषणतायाः प्रत्यासत्तित्वव्यवस्थापनं ६९९ । १ ॥

अभावस्य भावरूपत्वे बाधिका युक्तिः ७०७ । ५ ॥

अभावस्य भावरूपत्वे साधिका युक्तिः ६९३ । १ ॥


### ग ।


गुणकार्य्यतावच्छेदकप्रमात्वस्वरूपजिज्ञासा ३७२ । १ ॥

गुरुमतखण्डनं १७० । १ ॥

गोतमस्य आन्वीक्षिकीप्रणयने वीजकथनं ११४ । ६ ॥
ग्रन्थस्य चिन्तामणिनामकरणे वीजकथनं —४— १

## ज ।

ज्ञानस्य मानसज्ञानविषयत्वे बाधिका युक्तिः ७८४ । १ ॥
ज्ञानस्य मानसज्ञानविषयत्वे साधिका युक्तिः ७९३ । १२ ॥

## न ।

निर्व्विकल्पकप्रत्यक्षस्य लक्षणं ८०९ । २ ॥
निर्व्विकल्पकप्रत्यक्षस्वीकारे बाधिका युक्तिः ८०९ । ३ ॥
निर्व्विकल्पकप्रत्यक्षस्वीकारे साधिका युक्तिः ८१७ । ४ ॥

## प ।

प्रत्यक्षलक्षणं ५३० । १ ॥
प्रत्यभिज्ञानविचारः ८३९ । ५ ॥
प्रत्यक्षविशेषे सन्निकर्षविशेषस्य हेतुत्वव्यवस्थापनं ५७२ । १ ॥
प्रत्यक्षस्य विभागः ८०९ । १ ॥
प्रत्यक्षे आलोकसंयोगस्य कारणत्वव्यवस्थापनं ७२० । १ ॥
प्रमाणतत्त्वविवेकप्रतिज्ञा ११६ । २ ॥
प्रमाणतत्त्वविषये माध्यमकस्य प्रत्यवस्थानं ११६ । २ ॥
प्रमाणतत्त्वविषये विप्रतिपत्तयः १२१ । २ ॥
प्रमाणतत्त्वविषये सिद्धान्तः १८४ । १ ॥
प्रमात्वस्य जातित्वाद्यभावव्यवस्थापनं ३७२ । १ ॥
प्रमाप्रमाणविभागः ५०८ । १ ॥
प्रमायाः परत उत्पत्तिकत्वव्यवस्थापनं २८७ । १ ॥
प्रमायाः परत उत्पत्तिकत्वव्यवस्थापनविषये मीमांसकपूर्व्वपक्षनिरासः ३०८ । १ ॥

प्रमायाः परत उत्पत्तिकत्वव्यवस्थापने मीमांसकपूर्व्वपक्षः २८७ । ७ ॥
प्रमालक्षणे सिद्धान्तः ४०१ । १ ॥

## म ।

मङ्गलाचरणश्लोकः —१—१
मङ्गलाचरणस्य ग्रन्थसमाप्तिफलकत्वमतखण्डनं ५७ । १
मङ्गलाचरणस्य ग्रन्थसमाप्तिफलकत्वव्यवस्थापनं ५ । १ ॥
मङ्गलाचरणस्य विघ्नध्वंसफलकत्वव्यवस्थापनं ८८ । १ ॥
मनसो विभुत्ववादः ७६२ । २ ॥
मनसो विभुत्ववादनिरासपूर्व्वकमणुत्ववादव्यवस्थापनं ७७१ । १ ॥
मिश्र भट्टादिमतखण्डनं १७६ । ३ ।

## श ।

श्रोत्रपदार्थविवेचनं ६१७ । १ ॥

## स ।

समवायसाधनाङ्गविप्रतिपत्तिः ६४० । १ ॥
समवायसाधने अनुमानप्रणाली ६४८ । ५ ॥
सविकल्पकप्रत्यक्षलक्षणं ८३६ । १ ॥
सुवर्णस्य तेजस्त्वानुमानं ७४६ । ७ ॥
स्वीयग्रन्थस्य उत्कर्षकथनं ३ । १ ॥

---

# विज्ञापनम् ।

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि इति नैयायिकमतं तत्र प्रत्येकप्रमाणस्य वैश-द्यार्थं गङ्गेशोपाध्यायेन खण्डचतुष्टयात्मकः तत्त्वचिन्तामणिनामकग्रन्थो विरचितः मथु-रानाथतर्कवागीशेन व्याख्यातश्च । तत्र प्रथमं प्रत्यक्षखण्डं द्वितीयम् अनुमानखण्डं तृतीयमुपमानखण्डं चतुर्थं शब्दखण्डं एषां खण्डानां मध्ये अनुमानखण्डं अत्यन्तविस्तीर्णं पदार्थसाधकविविधयुक्तिपरिपूर्णञ्च अस्य तात्पर्य्यावगमे अन्यान्यखण्डं विनोपदेशेनैव बोधगम्यं भवति अत एतत्प्रदेशे पण्डितैरनुमानखण्डमेव विशेषेणाद्रियते, अस्मादेतत् खण्डं बहुषु स्थानेषु सुप्राप्यं, अन्यान्यखण्डन्तु अत्यन्तदुष्प्राप्यं, परन्तु मया बह्वायासेन प्रत्यक्षखण्डस्य आदर्शपुस्तकचतुष्टयं संगृहीतं एकं पुस्तकं नवद्वीपनिवासिसर्व्वप्रधान-नैयायिक-पूज्यपादश्रीयुक्तभुवनमोहनविद्यारत्न-भट्टाचार्य्य-समीपे प्राप्तं तत्पुस्तकं क-नाम्ना-ङ्कितं, एकं नवद्वीपनिवासिश्रीयुक्तहरिनाथतर्कसिद्धान्त-भट्टाचार्य्य-समीपे प्राप्तं तत्पुस्तकं ख-नाम्नाङ्कितं, अपरं पुस्तकं आँटपुरनिवासिपूज्यपादश्रीयुक्तश्यामापदन्यायभूषण-भट्टा-चार्य्य-समीपे प्राप्तं तत्पुस्तकं ग-नाम्नाङ्कितं, अपरञ्च पुस्तकं शान्तिपुरनिवासिश्रीयुक्त-रामनाथतर्करत्न-भट्टाचार्य्य-समीपे प्राप्तं तच्च पुस्तकं घ-नाम्नाङ्कितं, पुस्तकचतुष्टयमेव परिशुद्धं, एषु पुस्तकेषु प्रायशः पाठभेदो नास्ति क्वचित् स्थलविशेषे यत्पाठवैलक्षण्य-मस्ति तत् शब्दवैलक्षण्यमात्रं न तु तेनार्थवैलक्षण्यं तदपि मुद्रितपुस्तके उद्धृतम् । पूर्व्वं रघुनाथशिरोमणिकृतदीधितिनामकटीकया सह अनुमानखण्डं मुद्रितम् अन्यान्यखण्डन्तु सटीकं न केनापि मुद्रितं, शिरोमणिकृतटीकायाः प्रामाणिकत्वेपि तेन केवलम् हेत्वाभासान्तं व्याख्यातं अतएव मथुरानाथेनोक्तं, "जानन्ति केचिद्धेत्वा-भासान्तम्" इति । मथुरानाथतर्कवागीशेन तु खण्डचतुष्टयमेव व्याख्यातं, अतः एसियाटीकसोसाइटी-समाजानुमत्यनुसारेण मथुरानाथ-तर्कवागीशकृतरहस्यनामक-टीकया सह तत्त्वचिन्तामणिनामकग्रन्थस्य मुद्रणे मया प्रवृत्तं इति ।

कलिकातासंस्कृतविद्यालयाध्यापकः

श्रीकामाख्यानाथशर्म्मा ।

---

# तत्त्वचिन्तामणिः।

प्रत्यक्षखण्डे मङ्गलवादरहस्यं।

गुणातीतोऽपीशस्त्रिगुणसचिवस्त्र्यक्षरमयः
त्रिमूर्त्तिर्यः सर्ग-स्थिति-विलयकर्म्माणि तनुते।
कृपापारावारः परमगतिरेकस्त्रिजगतां
नमस्तस्मै कस्मैचिदमितमहिम्ने पुरभिदे ॥ १ ॥

---

न्यायाम्बुधिकृतसेतुं हेतुं श्रीराममखिलसम्पत्तेः।
तातं त्रिभुवनगीतं तर्कालङ्कारमादरान्नत्वा ॥१॥
श्रीमता मथुरानाथतर्कवागीशधीमता।
विषदीकृत्य दर्श्यन्ते प्रत्यक्षमणिफक्किकाः ॥२॥

निर्विघ्नं प्रारिप्सिततत्त्वचिन्तामणिनामग्रन्थसमाप्तिकामनया कृतं महादेवनमस्काररूपं मङ्गलं शिष्यशिक्षार्थमादौ निबध्नाति 'गुणातीतः' इति। 'तस्मै नमः', तस्मै कस्मै इत्यपेक्षायामाह 'गुणातीतः' इति। 'यः', 'गुणातीतोऽपि' समवायसम्बन्धेन गुणसामान्याभाववानपि, 'ईशः' अप्रतिहतेच्छः, अप्रतिहतत्वं अविसम्वादित्वं। 'अपि', सर्व्वत्र विरोधाभाससूचनाय। निर्गुणत्वस्य इच्छाविरोधात् गुणपदस्य साङ्ख्यमतसिद्धसत्त्व-रजस्तमोलक्षणगुणपरतया हि विरोधपरीहारसम्भवात् विरोधाभासत्वं। सत्त्वादयश्च न्यायनये सृष्टि-स्थिति-प्रलयोत्पादकाः अदृष्टभेदा

एवेति माप्रसिद्धिः[१]। 'योगुणातीतोऽपि', 'त्रिगुणसचिवः' स्वनिष्ठज्ञानेच्छा-कृतिसहकारेण कार्य्यमात्रहेतुः। स्वनिष्ठत्वप्रवेशाद्विरोधः। एवं 'योगुणातीतोऽपि', इत्यस्य सर्व्वत्रान्वयः। 'अक्षरमयः' 'त्रयः' ज्ञानेच्छा-प्रयत्नाः, 'अक्षराः' अविनाशिनः, यत्र 'तन्मयः' तदात्मकः। केचित्तु 'अक्षरमयः' 'त्रयः' अकारोकार-मकाररूपवर्णत्रयघटितोङ्कारपदाभिधेयः, शङ्केतसम्बन्धेन ॐकाररूपशब्दवानिति यावत्। गुणातीतपदेन सम्बन्धसामान्यावच्छिन्नगुणसामान्याभाववतो विवक्षितत्वात्[२] विरोधः। समवायसम्बन्धावच्छिन्नगुणसामान्याभावपरतया सत्त्वादिलक्षणगुणाभावपरतया वा विरोधपरीहार इत्याहुः। 'त्रिमूर्त्तिः' इति। सन्निति शेषः। ब्रह्म-विष्णु-शिवात्मकशरीरत्रयवान् सन् सृष्टि-स्थिति-प्रलयकर्म्माणि 'तनुते', इत्यर्थः। 'तनुते' विस्तारानुकूलयत्नवान्, अतो विरोधः। एतेन सर्गादिरेव ईश्वरे प्रमाणमिति सूचितं। 'कृपापारावारः' निरुपधिपरदुःखप्रहानेच्छा[३] 'कृपा', तस्या असाधारणाधिकरणमित्यर्थः। अत्रापि इच्छाया गुणत्वाद्विरोधः। 'त्रिजगतां', 'परमगतिः' परमहितकर्त्ता, कर्तृत्वस्य[४] गुणत्वाद्विरोधः[५]। 'एकः' अद्वितीयः, नित्यकृतिमद्वृत्तिभेद-

---

(१) सत्त्वादयश्च न्यायमते अदृष्टविशेष एव स च ईश्वरे नास्तीति न विरोध इति भावः।

(२) सम्बन्धत्वावच्छिन्नसंसर्गकप्रतियोगिताकगुणसामान्याभाववतो विवक्षितत्वादिति ग०।

(३) निरुपधिपरदुःखप्रहरणेच्छेति ग०।

(४) कृतिरूपस्येत्यर्थः।

(५) पूर्व्वोक्तगुणातीतोऽपीत्यनेन विरोध इति भावः।

अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतं
चिन्तादिव्यविलोचनेन च तयोः सारं विलोक्याखिलं।
तन्त्रे दोषगणेन दुर्गमतरे सिद्धान्तदीक्षागुरु-
र्गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिं ॥२॥

---

प्रतियोगितानवच्छेदकैकत्ववानिति यावत्[(१)]। एकत्वस्य गुणत्वाद्वि-रोधः। तस्मै किम्भूताय इत्यपेक्षायामाह 'कस्मैचित्' इति विशिष्यानिर्व्वचनीयगुणग्रामायेत्यर्थः। पुनः किम्भूताय 'अमितमहिम्ने' 'महिमा' सौन्दर्य्य-करुणादयः। पुनः किम्भूताय 'पुरभिदे' एकदा पुरत्रयभेदनकर्त्रे। पुरभिदित्यनेन एकदा पुरत्रयभेदनसमर्थस्य सुतरां विघ्नवारणक्षमत्वं सूचितं ॥१॥

प्रेक्षावत्प्रवृत्त्यर्थं ग्रन्थान्तरापेक्षया स्वीयग्रन्थस्योत्कर्षं दर्शयन् स्वकीर्त्त्यनुवृत्तये स्वनाम ग्रन्थनाम च दर्शयति 'अन्वीक्षेति। 'गङ्गेशः' 'अन्वीक्षानयं' न्यायशास्त्रं, 'गुरुभिः', 'आकलय्य' ज्ञात्वा, 'गुरूणां' प्राभाकराणां, 'मतं', च गुरुभिर्ज्ञात्वा, 'चिन्तादिव्यविलोचनेन च'[(२)] चिन्तारूपदिव्यचक्षुषा, 'तयोः' न्याय-गुरुमतयोः, 'अखिलं' निःशेषं, 'सारं' अभिप्रायं, 'विलोक्य', 'मितेन वचसा श्रीतत्त्वचिन्तामणिं', 'तनुते', इत्यन्वयः। अन्योऽपि 'गङ्गेशः' समुद्रः, 'मितेन वचसा' स्वत्वादिना, 'चिन्तामणिं तनुते', इत्युपमालङ्कारो व्यङ्ग्यः। गुरुमतस्य

---

(१) ननु अद्वितीय इत्यस्य स्वजातीयद्वितीयरहित इत्यर्थस्तथा च प्रतियोग्यप्रसिद्धिः राहित्यस्य अभावत्वेन गुणरूपत्वाभावाद्विरोधासङ्गतिरिस्ये-त्यत आह नित्येति।

(२) चिन्तादिव्यविलोकनेनेति ग०।

यतो मणेः पण्डितमण्डनक्रिया
प्रचण्डपाषण्डतमस्तिरस्क्रिया ।
विपक्षपक्षे न विचारचातुरी
न च स्वसिद्धान्तवचोदरिद्रता ॥ ३ ॥

प्रायशः निरस्ततया विशिष्य तदुल्लेखः । गङ्गेशः किम्भूतः 'दोषगणेन' दोषसमूहेन, 'दुर्गमतरे' अत्यन्तदुर्गमे, 'तन्त्रे' सूत्रादौ, 'सिद्धान्त-दीक्षागुरुः' सिद्धान्तोपदेशगुरुः ॥२॥

ग्रन्थस्य चिन्तामणिनामकरणे बीजभूतं मणेः सादृश्यं(१) दर्शयति । 'यतो मणेरिति । इदञ्च सर्व्वत्र सम्बध्यते । 'प्रचण्डेति, 'प्रचण्डाः' पाषण्डाः बौद्धाः, तएव तमांसि तेषां 'तिरस्क्रिया' । मणिपक्षे प्रचण्डपाषण्डी-भूतानि यानि तमांसि तेषां तिरस्क्रियेत्युन्नेयं । 'विपक्षेति' 'विपक्षाः' ये बौद्धादयः, तेषां यः 'पक्षः' सिद्धान्तः, तत्र 'न विचारचातुरी' न व्यवस्थानकौशलं(२) । मणिपक्षे तु 'विपक्षपक्षे' चौरादिपक्षे, न विलक्षणचरणचातुरी । मणिप्रभया तमोनिवृत्तेरिति भावः । 'न च स्वेति । 'स्वस्य' न्यायदर्शनस्य, यानि सिद्धान्तवचांसि तेषां 'न दरिद्रता' । मणिपक्षे 'स्वस्य' धनस्य, सिद्धः 'अन्तः' अवसानं, वृत्तमिति वचसोऽदरिद्रता न चेत्यर्थः, अकारप्रश्लेषात् । 'दरिद्रता' च प्रयोगाभावः, अनन्तं धनं भवतीत्यर्थः(३) । केचित्तु मणिपक्षे विपक्षेत्यस्य 'विपक्षपक्षेनस्य' विपक्षपक्षश्रेष्ठस्य, 'विचारचातुरी' विल-

(१) मणिसादृश्यमिति ख० ।
(२) न व्यवस्थापनकौशलमिति ख० ।
(३) भवतीत्यभिप्राय इति ख० ।

इह खलु सकलशिष्टैकवाक्यतया अभिमतकर्म्मारम्भसमये तत्समाप्तिकामा मङ्गलमाचरन्ति। तच्च यद्यपि मङ्गलस्य कारणता नान्वयव्यतिरेकगम्या विनापि मङ्गलं प्रमत्तानुष्ठितसमाप्तेः। न च तत्र[१] जन्मान्तरीयतत्कल्पनं, अन्योन्याश्रयात् लोकावगतकारणेनान्यथासिद्धेश्च।

---

क्षणचरणचातुरी, न चेत्यन्वयः। स्वसिद्धेत्यस्य 'स्वस्य' साधनस्य, सिद्धः 'अन्तः' अवसानं, वृत्तमिति वचसा दरिद्रतेत्यर्थः इत्याद्धः। एतन्मते नाकारप्रश्लेषः ॥२॥

स्वयं कृतस्य मङ्गलस्य कदाचित् केनचित् निरर्थकत्वमाशङ्क्येतेत्यतो मङ्गलस्य सफलत्वं व्यवस्थापयितुं प्रथमतो मीमांसकसम्प्रदायमतमुपदर्शयति 'इहेत्यादिना सम्प्रदायविद इत्यन्तेन[२]। 'इह' अस्मिन् लोके, मनुष्यलोक इति यावत्। 'खलु' अवश्यं, 'सकलशिष्टैकवाक्यतया' मङ्गलस्य समाप्तिहेतुत्वेन सकलशिष्टसम्मततया, एतेन[३] भ्रममूलकता निराकृता[४]। 'आरम्भसमये' तत्पूर्व्वसमये, 'तत्समाप्तिकामाः' अभिमतकर्म्मसमाप्तिकामाः। ननु समाप्तिहेतुताया मङ्गलवृत्तित्वे किं मानं, न तावत् प्रत्यक्षं, यस्य पुरुषस्य प्रमत्तकर्तृकसमाप्तिस्थले ऐहिकमङ्गलविरहनिश्चयो मङ्गले लोकावगतकारणेन समाप्तिं प्रति अन्यथासिद्धत्वग्रहश्च विद्यमानः तेन पुरुषेण

---

(१) नापीति ख०।

(२) सम्प्रदाय इत्यन्तेनेति ग०।

(३) एतेन मङ्गलस्य समाप्तिहेतुत्वेन सकलशिष्टसम्मतत्वकथनेनेत्यर्थः।

(४) सर्व्वेषामेकदा भ्रमो न सम्भवतीति भावः।

तदानीं मङ्गलवृत्तितया तस्याः प्रत्यक्षतो निश्चेतुमशक्यत्वात्। अतएव नानुमानाद्यपि, तादृशपुरुषविशेषेण तदानीं तस्य अनुमानादिनापि ग्रहासम्भवात् इत्यत आह 'तत्र यद्यपीति। 'तत्र' आचारे, सप्तम्यर्थो-निमित्तत्वं तच्च प्रयोजकत्वं अन्वयस्यास्य कारणतायां, तथा च तदा-चारप्रयोजकीभूता समाप्तिकारणता यद्यपि तादृशपुरुषविशेषेण तादृशकालविशेषे न मङ्गलस्यान्वयव्यतिरेकगम्येति योजना। एतेन मङ्गलवृत्तिसमाप्तिकारणतात्वेन पक्षत्वे तादृशकारणतायां सिद्धायां विवादाभावः। असिद्धायामाश्रयासिद्धिः। न च मङ्गलवृत्तिकारणता-त्वेन पक्षता न तु समाप्त्यन्तर्भावः, समाप्त्यन्वयव्यतिरेकगम्यत्वाभावस्य साध्यः, कारणतात्वञ्च कारणपदप्रवृत्तिनिमित्तत्वं(१) तेन कारणतात्वस्य कार्यभेदेन विभिन्नतया प्रकृतकारणतात्वेन पक्षत्वे आश्रयासिद्धिः कारणतान्तरत्वेन पक्षत्वे चार्थान्तरमिति दोषस्य नावकाश इति वाच्यं। तत्रेत्यस्यानन्वयापत्तेः मङ्गलवृत्तिकारणतायास्तादृशाचारविषयत्वा-सिद्धेरिति दूषणं प्रत्युक्तं, समाप्तिकारणतात्वेन पक्षत्वात्। तादृश-पुरुषविशेषस्य तादृशकालविशेषे मङ्गलान्वय-व्यतिरेकगम्यत्वञ्च मङ्गलान्वयव्यतिरेकसहचारज्ञानजन्यमङ्गलवृत्तिताप्रकारकप्रत्यक्षनिश्चय-विषयत्वं तथा च समाप्तिकारणता न मङ्गलान्वयव्यतिरेकसहचार-ज्ञानजन्यतत्कालीन-तत्पुरुषीयमङ्गलवृत्तिताप्रकारकप्रत्यक्षनिश्चयवि-षय इति फलितं। अखण्डाभावस्य साध्यत्वान्न जन्यान्तभागवैयर्थ्यं(२)।

---

(१) कारणपदशक्यतावच्छेदकत्वमित्यर्थः।

(२) तत्कालीन-तत्पुरुषीय-मङ्गलवृत्तिताप्रकारकनिश्चयविषयत्वाभा-वस्य अभावान्तरत्वेन साध्यानन्तर्गतत्वात् न साध्यस्य व्यर्थविशेषणघटितत्व-मिति भावः।

पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया च नांशतः सिद्धसाधनं(१)। नन्वनन्यथासिद्धनियतपूर्ववर्त्तिता कारणता, तत्रानन्यथासिद्धत्वज्ञाने न सहचारज्ञानापेक्षा न वा नियमांशज्ञानेपि, व्यापकताग्रहे सहचारग्रहस्याहेतुत्वात्। धूमत्वादिघटितव्याप्तिग्रह एवान्वयसहचारग्रहस्य हेतुत्वेन व्यवस्थापितत्वात्। अतएवान्वयोऽन्वयसहचारधीः, व्यतिरेकश्च व्यभिचारज्ञानव्यतिरेकः, तदुभयजन्यतादृश-प्रत्यक्षनिश्चयविषयो नेत्यर्थः इत्यपि निरस्तं। व्यतिरेकसहचारज्ञानवदन्वयसहचारज्ञानस्याप्यहेतुत्वात्। अत्राहुः तदितरयावत्कारणसत्त्वे तत्सत्त्वेऽवश्यं कार्य्यं, तदभावे च कार्य्याभाव इत्यन्वयसहचार-व्यतिरेकसहचारग्रहो विशिष्टकारणतासाक्षात्कारहेतुः तथैवान्वयव्यतिरेकात्। न लंशभेदव्यवस्था। नव्यास्तु अन्वयो हेत्वभाववति कार्य्यान्वयज्ञानं व्यभिचारज्ञानमिति यावत्। तद्व्यतिरेकजन्यतादृश-निश्चयविषयो नेत्यर्थः इति प्रोचुः(२)। हेतुमाह 'विनापीति'। तदानीं तत्पुरुषेण विनापि मङ्गलं प्रमत्तानुष्ठितसमाप्त्युत्पत्तिदर्शनादित्यर्थः। तथा च तत्कालीन-तत्पुरुषीयमङ्गलव्यतिरेकव्यभिचारग्रहविषय-निरूपितकारणतात्वादितिहेतुर्नातो वैयधिकरण्यं(३)। केचित्तु मङ्गलं

---

(१ समाप्तिकारणतात्वसामानाधिकरण्येन पक्षत्वे मङ्गलवृत्तिसमाप्तिकारणतात्वान्तर्भावेन सिद्धसाधनं स्यादिति भावः।

(२) इति प्राहुरिति ख०।

(३) पक्षतावच्छेदकेन सार्द्धं हेतोरसामानाधिकरण्यमित्यर्थः। तथा च समाप्तिकारणता न मङ्गलान्वयव्यतिरेकसहचारज्ञानजन्य-तत्कालीन-तत्पुरुषीय-मङ्गलवृत्तिताप्रकारक-प्रत्यक्षनिश्चयविषयः तत्कालीन-तत्पुरुषीय-मङ्गलव्यतिरेकव्यभिचारज्ञानविषयनिरूपितकारणतात्वात् इत्यभिप्रायः।

न समाप्त्यन्वयव्यतिरेकज्ञानजन्य तत्कालीन-तत्पुरुषीय-समाप्तिकारणत्वप्रकारकप्रत्यक्षनिश्चयविषयः तत्कालीन-तत्पुरुषीय-समाप्तिव्यभिचारित्वग्रहविषयत्वादिति समुदितार्थः इत्याहुः। नन्वाहेतुरसिद्धः, तस्य हि पुरुषस्य तदानीं प्रमत्तानुष्ठितसमाप्तावैदिकमङ्गलव्यभिचारित्वग्रहेऽपि न तत्र मङ्गलसामान्यव्यतिरेकव्यभिचारित्वग्रहः, तदानीं तेन पुरुषेण प्रमत्तानुष्ठितसमाप्तिपूर्वं जन्मान्तरीयमङ्गलानुमानादित्यभिप्रायेणाशङ्कते 'न च तत्रेति। 'तत्र' प्रमत्तानुष्ठितसमाप्तिपूर्वं, 'जन्मान्तरीय-तत्कल्पनं' तेन पुरुषेण तदानीं जन्मान्तरीयमङ्गलानुमानं, इयं समाप्तिर्मङ्गलपूर्व्विका समाप्तित्वात् शिष्टानुष्ठितसमाप्तिवदित्येवंरूपेणेति भावः। 'अन्योन्याश्रयादिति' सिद्धे जन्मान्तरीणमङ्गले व्यभिचारज्ञानाभावे हेतुताग्रहः, हेतुताग्रहे च समाप्तित्वेन जन्मान्तरीयमङ्गलानुमानमन्यथा त्वप्रयोजकमित्यन्योन्याश्रयादित्यर्थः। नन्वऽनुकूलतर्को न व्याप्तिग्रहहेतुः, किन्तु क्वचिद्व्यभिचारज्ञाननिवर्त्तकतया तस्योपयोगः तथा च कारणत्वग्रहं विनापि व्यभिचारज्ञानसामग्र्या असार्व्वदिकत्वेन समाप्तित्वे स्वतःसिद्धमङ्गलपूर्व्वकत्वव्यभिचारज्ञानाभावादेव जन्मान्तरीयमङ्गलानुमानसम्भव इत्यस्वरसाद्धेत्वन्तरमाह 'लोकावगतकारणेनेति। कण्ठ-ताल्वाद्यभिघातादिनेत्यर्थः। 'अन्यथासिद्धेश्च' तस्य पुरुषस्य तदानीं मङ्गले समाप्तिं प्रति अन्यथासिद्धत्वज्ञानाच्च। तथा च तत्कालीन-तत्पुरुषीय-मङ्गलनिष्ठान्यथासिद्धत्वज्ञानविषयनिरूपितकारणतात्वादिति हेतुः।

नापि मङ्गलं सफलं अविगीतशिष्टाचारविषयत्वात् दर्शवदिति फलसिद्धौ[१] प्रारिप्सितसमाप्तेस्तदानीमपेक्षितत्वेन नियमेनोपस्थितत्वात् फलान्तरस्यातथाभावात् विश्वजिन्न्यायेन फलकल्पने गौरवात् परिशेषानुमानेन तत्कारणताग्रहः।

---

तस्य पुरुषस्य तदानीमनुमानेनापि मङ्गले न समाप्तिकारणताग्रहसम्भव इत्याह 'नापीत्यादिना 'कारणताग्रहः' इत्यन्तेन। 'मङ्गलमिति नमस्कारादिकमित्यर्थः। नतिस्तुत्यादिसाधारणस्य मङ्गलत्वस्यैकस्याभावात् मङ्गलपदस्य नानार्थत्वात्। 'सफलमिति अभीष्टफलजनकमित्यर्थः। अभीष्टत्वञ्च[२] स्वकर्त्तव्यताप्रयोजकेच्छाविषयत्वं। 'अविगीतशिष्टाचारविषयत्वादिति। अविगीतो यः शिष्टाचारस्तद्विषयत्वादित्यर्थः। 'आचारः' प्रवृत्तिः, न तु क्रिया, विषयत्वानन्वयात्। शिष्टकृते निष्फलजनताड़नादौ व्यभिचारवारणायाविगीतेत्याचारविशेषणं, 'अविगीतत्वं' वेदनिषिद्धाविषयकत्वं, पापाजनकत्वं वा। शिष्टकृतनिष्फलस्य न तथा[३]। "नित्य-नैमित्तिकैस्त्वेव काम्यैरन्यैरगर्हितैः। कर्म्मभिस्तु नयेत् कालं न विप्रः क्षणिको भवेत्" इत्यनेन, "वृथाचेष्टां न कुर्व्वीत" इति, "निष्फलानि च कर्म्माणि नारभेत विचक्षणः" इत्यादिना च तन्निषेधात्[४]। तथापि पश्वादिकृतनि-

---

(१) सफलत्वसिद्धाविति ख॰, ग॰, च।
(२) अभीष्टफलत्वञ्चेति ख॰।
(३) न पापाजनकमित्यर्थः।
(४) तत्र निषेधादिति ख॰ :

ष्फलचेष्टायां व्यभिचारः। "नित्य-नैमित्तिकैरित्यादिनिषेधविधीनामुपक्रमानुरोधेनाधिकारिमात्रपरतया तदीयस्थाचेष्टाया अनिषिद्धत्वादतः 'शिष्टेति, 'शिष्टत्वं' च बालक-पतितान्त्यजाद्यतिरिक्तत्वे सति वेदप्रामाण्याभ्युपगन्तृत्वं। न च तथापि भोगे व्यभिचारः तस्याप्युद्देश्यतया कृतिविषयत्वादिति वाच्यं। साध्यत्वेन प्रवृत्तिविषयतायाः फलव्यावृत्ताया अत्र प्रवेशात्। एतेन[१] नान्तरीयकस्य प्रवृत्तिविषयत्वाभ्युपगमेपि निष्फले[२] भोजनादि-नान्तरीयके न व्यभिचारः, तत्र तादृशविषयत्वाभावात्। परमेश्वरकृतेरपि तादृशविषयत्वाभावात्[३] तादृशविषयत्वाभ्युपगमेपि प्रवृत्तित्वादिजातेस्तत्राभावाच्च न तामादाय निष्फले जनताड़नादौ[४] व्यभिचारस्तदवस्थः। न च तथापि कीर्त्तनादिना फलाजनके शिष्टकृतयागे व्यभिचार इति वाच्यं। स्वरूपयोग्यत्वरूपस्य फलजनकत्वस्य विवक्षितत्वात् तस्य च तत्रापि सत्त्वात्।

यद्वा आचारस्यात्र कृतिमात्रं, तथा च बौद्धकृते निष्फलजनताड़नादौ व्यभिचारवारणाय शिष्टेत्याचारविशेषणं, 'शिष्टत्वं' भ्रमाजन्यत्वं, परमेश्वरकृतेरपि निरुक्तविषयत्वात्तामादाय निष्फले व्यभिचारवारणायाविगीतेत्याचारविशेषणं, 'अविगीतत्वं' अनित्यत्वं।

केचित्तु अविगीताचारविषयत्वाच्छिष्टाचारविषयत्वादितिहेतुद्वये तात्पर्यं, निष्फले चैत्यवन्दनादौ व्यभिचारवारणाय प्रथमहेताववि-

---

(१) साधात्वाख्यविषयत्वप्रवेशेनेत्यर्थः।
(२) स्वकर्त्तव्यताप्रयोजकेच्छाविषयाजनके इत्यर्थः।
(३) साध्यत्वेन प्रवृत्तिविषयत्वाभावादित्यर्थः।
(४) पश्वादिकृत इति शेषः अन्यथा अविगीतपदेनैव वारणसम्भवात्।

गीतत्वं, द्वितीयहेतौ च शिष्टत्वमाचारविशेषणं। 'अविगीतत्वं' च दृष्टोत्पत्तिनान्तरीयकदुःखेतरदुःखाजनकत्वं, बलवदनिष्टाननुबन्धित्वे सति इष्टसाधनत्वं वा तद्ग्रहस्य शिष्टैकवाक्यतया, जनताड़नादिकन्तु नैतादृशं निष्फलत्वात् कर्म्ममात्रस्यैव कष्टत्वाच्च। न तु वेदनिषिद्धा-विषयकत्वं, पापाजनकत्वं वा 'अविगीतत्वं', तावता वैदिककर्म्माधि-कारिणा कृते निष्फले व्यभिचारवारणसम्भवेपि पश्वादिकृतवृथाचेष्टायां व्यभिचारस्य दुर्व्वारत्वात्। "नित्य-नैमित्तिकैरित्यादिना च निषेध-विधीनामधिकारिमात्रपरत्वात्। द्वितीयहेतौ च 'शिष्टत्वं' भ्रमाज-न्यत्वं। अन्यत् सर्व्वं पूर्व्ववदित्याहुः।

केचित्तु सफलमित्यस्य पापाजनकत्वे सतीष्टसाधनमित्यर्थः। तथा च श्येनयागागम्यागमनादौ व्यभिचारवारणायाविगीतेत्याचार-विशेषणं, 'अविगीतत्वं' पापाजनकत्वं, निष्फले चैत्यवन्दनादौ व्यभि-चारवारणाय शिष्टेति 'शिष्टत्वं' च इष्टसाधनताभ्रमाजन्यत्वं, न तु भ्रमाजन्यत्वमात्रं तथा सति अगम्यागमनाद्याचारस्यापि बलवदनिष्टा-ननुबन्धित्वभ्रमजन्यतया हेतावविगीतपदवैयर्थ्यापत्तेः। बलवदनिष्टा-ननुबन्धित्वज्ञानस्य प्रवृत्त्यजनकत्वनये च भ्रमाजन्यत्वमात्रमेव तत्। न च "कष्टं कर्म्म" इतिन्यायात् "वृथाचेष्टां न कुर्व्वीत" इत्यादि स्मृतेश्च[१] चैत्यवन्दनादावपि पापजनकत्वाच्छिष्टपदवैयर्थ्यमिति वाच्यं। तद्विलक्षणपापस्यैवात्र प्रवेशात् पश्वादिकृतवृथाचेष्टाया अप्युक्तक्रमेण पापाजनकतया तत्रैव व्यभिचारवारकत्वेन पापसामान्यप्रवेशेपि सार्थ-

(१) श्रुतेश्चेति ख॰, ग॰, घ।

कत्वसम्भवाच्चेत्याहुः। तदसत्। समाप्तिफलकत्वविचारे विशिष्टसाध्यकरणे अर्थान्तरत्वापत्तेरिति संक्षेपः।

'इति फलसिद्धौ' 'इति' इत्यनुमानेन, सफलत्वसिद्धौ, जातायां, 'परिशेषानुमानेन तत्कारणताग्रहः' 'तस्य' पुरुषस्य, तदानीं मङ्गले समाप्तिकारणताग्रहः, इति योजना। 'परिशेषानुमानं' च मङ्गलं समाप्तिजनकं समाप्त्यन्यफलाजनकत्वे सति सफलत्वादित्याकारकं। 'फलत्वं' च स्वकर्त्तव्यताप्रयोजकेच्छाविषयत्वं, तेन मङ्गलस्य स्वध्वंसविघ्नध्वंसादिजनकत्वेपि न सत्यन्तविशेषणासिद्धिः(१)। एतदनुमाने च पूर्व्वानुमानं(२) विशेष्यदलसाधकतया(३) उपयुक्तमिति भावः।

ननु मङ्गलं न समाप्तिजनकं समाप्तिविषयककामनावत्पुरुषाकर्त्तृकत्वात् घटादिविषयककामनावत्पुरुषाकर्त्तृको यागादिर्यथा न घटादिजनक इति सामान्यतोदृष्टानुमानेन(४) मङ्गले समाप्तिजनकत्वाभावज्ञानात् कथमिदं समाप्तिजनकत्वानुमानमित्यत आह 'प्रारिप्सितेति, 'नियमेनापेक्षितत्वेन' नियमेन मङ्गलकर्तुः कामनाविषयत्वेन, 'उपस्थितत्वात्' अनुमातुस्तादृशपुरुषस्योपस्थितत्वात्, तथा च समाप्तिजनकत्वाभावसाधकोक्तहेतोरज्ञानासिद्धिरिति भावः।

---

(१) अन्यथा स्वध्वंसं प्रति स्वस्य कारणत्वेन मङ्गलस्य मङ्गलध्वंसं प्रतिकारणत्वात् विघ्नध्वंसादिकं प्रति कारणत्वाच्च समाप्त्यन्यफलाजनकत्वे सति इति विशेषणासिद्धिः स्यादिति भावः।

(२) मङ्गलं सफलं अविगीतशिष्टाचारविषयत्वादित्यनुमानमित्यर्थः।

(३) सफलत्वादितिदलसाधकतयेत्यर्थः।

(४) यो यद्विषयककामनावत्पुरुषाकर्त्तृकः स न तज्जनकः इत्यनुमानेनेत्यर्थः।

ननु तथापि समाप्तिभिन्नस्य ग्राम-पश्‍ु-हिरण्यादेरपि फलत्व-ज्ञानसम्भवात् सत्यन्तविशेषणज्ञानमेव नास्ति कुतोऽनुमानमिदमित्यत आह 'फलान्तरस्येति समाप्तिभिन्नस्य ग्राम-पशु-हिरण्यादेरित्यर्थः। 'अतथाभावात्' अतथाभूतत्वेनोपस्थितत्वात्, मङ्गलकर्तुस्तदानीं काम-नाया अविषयत्वेनोपस्थितत्वादिति यावत्। तथा च हेतुज्ञान-सत्त्वान्मङ्गलं न समाप्तिभिन्नग्रामादिफलकं ग्रामादिविषयककामना-वत्पुरुषाकर्तृकत्वात् घटादिविषयककामनावत्पुरुषाकर्तृको यागादि-र्यथा न घटादिफलक इति सामान्यतोदृष्टानुमानेन ग्रामादिफल-कत्वाभावज्ञानमिति भावः।

नन्वेतादृशानुमानेन समाप्तिभिन्नग्रामादिफलकत्वाभावज्ञानसम्भ-वेपि विश्वजिन्न्यायेन समाप्तिभिन्नस्वर्गफलकत्वज्ञाने बाधकाभावात् कुतः सत्यन्तविशेषणज्ञानं, स्वर्गकामनां विना समाप्तिकामनाया एवानुपपन्नतया मङ्गलकर्तुस्तदानीं स्वर्गकामनाया अप्यावश्यकत्वेन उक्तहेतुना स्वर्गफलकत्वाभावज्ञानसम्भवादित्यत आह 'विश्वजिदिति। यथा विश्वजिद्यागस्य स्वर्गरूपफलाश्रवणेऽपि स्वर्गफकत्वज्ञानं तथे-त्यर्थः। 'फलकल्पने' समाप्तिभिन्नस्वर्गफलकत्वज्ञाने, 'गौरवादिति, अनन्तस्वर्गव्यक्तिकल्पनारूपगौरवज्ञानस्य प्रतिबन्धकत्वादित्यर्थः। न च समाप्तित्वापेक्षया लघुतया स्वर्गत्वावान्तरवैजात्यस्य कार्य्यतावच्छेदकस्य कल्पनेऽनन्तस्वर्गव्यक्तिकल्पनं फलमुखतया न दोषायेति वाच्यं। फलमुखगौरवस्यापि दोषत्वादिति भावः।

यद्वा स्वर्गमात्रस्य फलत्वे नियमतः समाप्तिकामनया शिष्टानां मङ्गलानुष्ठानानुपपत्त्या समाप्ति-स्वर्गयोरुभयोः फलकल्पने गौरव-

व्यभिचारेण कारणत्वस्याभावात् उपायसहस्रेणापि ग्रहीतुमशक्यत्वात् ।

---

मिति गौरवज्ञानस्य प्रतिबन्धकत्वादित्यर्थः । स्वर्गकामना च समाप्तिकामनोपपादकतया उपपन्नेति भावः ।

नव्यास्तु 'इतिफलसिद्धाविति, तस्य पुरुषस्य तदानीं जायमानायामिति शेषः । तथा चैतदनुमानेन तस्य पुरुषस्य तदानीं सफलत्वसिद्धौ जायमानायां 'परिशेषानुमानेन' समाप्त्यन्यफलजनकत्वबाधज्ञानसहकारेण, 'तत्कारणताग्रहः' समाप्तिकारणताग्रहः, इति योजना प्रारिप्सितेत्यादिग्रन्थस्तु पूर्व्ववदिति व्याचक्रुः ।

'व्यभिचारेण' व्यभिचारज्ञानेन, अन्यथासिद्धत्वग्रहेण चेति शेषः । 'कारणत्वस्याभावात्' कारणत्वाभावज्ञानात्, तथा च बाध इति भावः । 'उपायसहस्रेण' हेतुसहस्रेण, 'ग्रहीतुमशक्यत्वादिति । न च प्रमत्तानुष्ठितसमाप्तिस्थले जन्मान्तरीयमङ्गलसंशयेन व्यभिचारसंशयादन्यथासिद्धत्वसंशयाच्च बाधसंशय एव न तु बाधनिश्चयः, स चानुमानप्रवृत्तावनुकूल एव[१] न तु प्रतिबन्धक इति वाच्यं । प्रमत्तानुष्ठितसमाप्तिस्थले जन्मान्तरमङ्गलस्य साधकाभावेन व्यतिरेकनिर्णये व्यभिचारनिर्णयस्यैव सत्त्वात् अन्यथासिद्धत्वस्यापि निर्णयसत्त्वाच्च । न चैवंसिद्धान्ते वेदोऽपि कथं बोधकः[२] स्यात् बाधनिश्चयसत्त्वेन योग्यताज्ञानविरहादिति वाच्यं । मीमांसकनयेऽन्वयप्रयोजकरूपवत्त्व-

---

(१) संशयस्य पक्षतात्वादिति भावः ।

(२) मङ्गले समाप्तिसाधनताया इत्यादिः ।

तथापि तथाविधशिष्टाचारानुमितश्रुतिरेव मङ्गलस्याभिमतहेतुत्वे मानं।

---

स्यैव योग्यतात्वेन बाधनिश्चयसत्त्वेपि योग्यताज्ञानसम्भवाद्बाधनिश्चयस्य शाब्दबोधाप्रतिबन्धकत्वादिति भावः।

केचित्तु 'ग्रहीतुमशक्यत्वादित्यस्य अप्रामाण्यज्ञानानास्कन्दितनिश्चयस्याशक्यत्वादित्यर्थः। व्यभिचारान्यथासिद्धत्वयोः संशयसत्त्वादुत्पन्नायामप्यनुमितावप्रामाण्यसंशयादितिभावः। न चैवंसिद्धान्ते वेदस्यापि तादृशनिश्चयजनकत्वासम्भवः, व्यभिचारादिसंशयसत्त्वेन तत्राप्यप्रामाण्यसंशयसम्भवादिति वाच्यं। वेदजन्यत्वज्ञानादेव तत्र नाप्रामाण्यसंशय इत्यभिप्रायादित्याहुः। तदसत् तथा सति वेदानुमाने अप्रामाण्यसंशयस्य दुर्व्वारत्वादिति ध्येयं।

यद्यपि तत्पुरुषस्य तदानीं प्रत्यक्षादितो मङ्गले समाप्तिकारणत्वग्रहासम्भवेपि पुरुषान्तरस्य कालान्तरे तस्यैव पुरुषस्य च मङ्गले समाप्तिकारणत्वप्रत्यक्षानुमानसम्भवात् प्रत्यक्षानुमानमपि तत्र प्रमाणं सम्भवति, अन्यथा दण्डादावपि प्रत्यक्षादितो घटादिकारणत्वासिद्धिप्रसङ्गात्, कस्यचित् पुरुषस्य कदाचित्तत्रापि व्यभिचारादिज्ञानसत्त्वात्, तथापि प्रौढ़िवादेन तादृशपुरुषस्यापि तस्मिन्काले समाप्तिकारणत्वग्रहमुपपादयति 'तथापीति, 'तथाविधशिष्टाचारानुमितेति अविगीतशिष्टाचारानुमितेत्यर्थः। 'मानमिति तस्य पुरुषस्य तदानीं प्रमाजनकमित्यर्थः। न चानुमितवेदः आनुपूर्व्वीविशेषानिश्चयेन

नार्थप्रत्यये[१] क्षम इति वाच्यं। विनाप्यानुपूर्वीज्ञानं तदर्थबोधकत्वेन[२] ज्ञातादेव शब्दात्तदर्थबोधादिति भावः। श्रुत्यनुमानञ्च, नमस्कारादिकं वेदबोधितसमाप्तिसाधनताकं समाप्त्युद्देश्यकाविगीतशिष्टाचारविषयत्वात्। साध्ये विशिष्य समाप्तेः प्रवेशादविगीतशिष्टाचारविषयत्वे सामान्यतो हेतूकृते दर्शादावेव व्यभिचार इति हेतौ समाप्त्युद्देश्यकेत्याचारविशेषणं। उद्देश्यत्वञ्च विषयताविशेषः। तथा च यो यदुद्देश्यकाविगीतशिष्टाचारविषयः, स वेदबोधिततत्साधनताकः यथा दर्शः, इति सामान्यतोव्याप्तिः[३] शिष्टकृते निष्फले चैत्यवन्दनादौ व्यभिचारवारणायाविगीतेति, 'अविगीतत्वं' वेदनिषिद्धाविषयकत्वं, शिष्टकृतनिष्फलञ्च "वृथाचेष्टां न कुर्व्वीतेत्यादिवेदनिषिद्धमेव। पश्वादिकृते निष्फले व्यभिचारवारणाय शिष्टेति, 'शिष्टत्वं' च बालकपतिताद्यन्यजात्यतिरिक्तत्वे सति वेदप्रामाण्याभ्युपगमविशिष्टत्वं[४] अभ्युपगमो निश्चयः। न च तथापि वेदप्रामाण्याभ्युपगन्तुर्भोजनादौ व्यभिचार इति वाच्यं। अलौकिकत्वे सतीत्यनेनापि विशेषणीयत्वात्। अलौकिकत्वञ्च लोकावगतेष्टसाधनताश्रयान्यत्वं। वेद-तदुपजीविप्रमाणातिरिक्तप्रमाणं लोकः, दर्शादेरिष्टसाधनत्वस्य वेदेन तदुपजीविना यागः स्वर्गसाधनं स्वर्गसाधनत्वेन वेदबोधितत्वादित्यनुमानेनैव वा बोधनान्न दृष्टान्तासिद्ध्यादिः। तावत्पदार्थोपस्थितिसहकृतमनोजन्य-

---

(१) नार्थप्रत्यायन इति ग०।
(२) तदर्थज्ञापकत्वेनेति ग०।
(३) इत्युदाहरणवाक्यप्रतिपाद्या सामान्यमुखी व्याप्तिरित्यर्थः।
(४) वेदप्रामाण्याभ्युपगन्तृत्वमिति ग०।

विशिष्टज्ञानमादाय यथा न दृष्टान्तासिद्ध्यादिः तथा वेदलक्षण एव स्फुटीभविष्यति। न च तथापि भ्रान्त्या स्वर्गफलान्यफलमुद्दिश्य यथोक्त-शिष्टकृतयागादौ व्यभिचारः, तस्य तत्साधनत्वेन वेदाबोधितत्वादिति वाच्यं। चैत्यवन्दनादिवत्तस्यापि वृथाचेष्टात्वेन वेदनिषिद्धत्वात्(१) स्वकर्त्तव्यताप्रयोजकेच्छाविषयस्वरूपायोग्यकर्म्मण एव वृथाचेष्टात्वात्। वस्तुतस्तु पश्वादि-तदितरसाधारणकृते चैत्यवन्दनादिनिष्फलसामान्ये स्वःफलान्यफलमुद्दिश्य कृते यागादौ च व्यभिचारवारणाय 'शिष्टेति' 'शिष्टत्वं' भ्रमाजन्यत्वं। भोजनादौ लौकिककर्म्मणि व्यभिचारवारणाया-विगीतेति, 'अविगीतत्वं' लौकिकाविषयकत्वं, तच्च निरुक्तमेव। न च तथापि उत्पन्नतत्त्वज्ञानिकृते चैत्यवन्दनादौ व्यभिचारस्तस्यापि भ्रमा-जन्यत्वादिति वाच्यं। चैत्यवन्दनादेस्तत्त्वज्ञानिकर्तृकत्वे मानाभावात् तत्सत्त्वे प्रवृत्त्यन्यथानुपपत्त्या भ्रमस्याप्यावश्यकत्वाच्च। तदुद्देश्यकत्वेना-प्याचारो विशेषणीयः तेन दर्शादौ वेदबोधितसमाप्तिसाधनत्वाभावे-ऽपि न व्यभिचार इति तत्त्वम्।

उपाध्यायास्तु भोजनादौ व्यभिचारवारणायालौकिकत्वे सतीति पूरणीयम्। अलौकिकत्वञ्च लोकावगतबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताश्रयान्यत्वं, अविगीतपदसार्थक्याय बलवदनिष्टाननुबन्धित्वमखण्डभेदघटकं। इत्यञ्चागम्यागमनादौ व्यभिचारवारणायाविगीतेति, 'अविगीतत्वं' बलवदनिष्टाननुबन्धित्वं, अत्र निष्फलजन्यानिष्टव्यावृत्तानिष्टस्य प्रविष्टतया चैत्यवन्दनादौ भ्रान्त्या स्वःफलान्य-

---

(१) तथाचाविगीतत्वाभावात्तद्घटितहेत्वभावादेव न तत्र व्यभिचार इति भावः।

फलमुद्दिश्य कृते यागादौ च व्यभिचारवारणाय शिष्टेति। बलवद्-निष्टसामान्यप्रवेशेऽपि पश्वादिकृततथाचेष्टायां व्यभिचारवारणाय शिष्टेति, 'शिष्टत्वं' इष्टसाधनत्वभ्रमाजन्यत्वं, न तु भ्रमाजन्यत्वमात्रं, अगम्यागमनाचारस्यापि[१] बलवदनिष्टाननुबन्धित्वभ्रमजन्यतया अवि-गीतपदवैयर्थ्यापत्तेः[२] बलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवृत्त्यहेतुत्वनये तु[३] भ्रमाजन्यत्वमेव शिष्टत्वमित्याहुः।

अन्ये तु नमस्कारादिर्वेदबोधितबलवदनिष्टाननुबन्धित्वविशिष्टस-माप्तिसाधनताकः समाप्युद्देश्यकाविगीतशिष्टाचारविषयत्वादित्यनुमानं, व्याप्तिश्च पूर्ववत्। हेतावगीतत्वविशेषणसार्थक्याय साध्ये बलवदि-त्यादि[४]। तथा सति[५] हेतावविगीतविशेषणानुपादाने इष्टानिष्टो-भयजनके श्येनादौ व्यभिचारापत्तेः। 'अविगीतत्वं' च पापाजनकत्वं। रात्रिश्राद्धादिवारणाय शिष्टेति, 'शिष्टत्वं' इष्टसाधनत्वांशे अभ्रान्तत्वं, न त्वभ्रान्तत्वमात्रं, अविगीतपदवैयर्थ्यापत्तेः, श्येनादेरपि बलवदनिष्टा-ननुबन्धित्वभ्रमेणाचारात्। तथा चेष्टसाधनत्वांशे भ्रमाजन्येति फलि-तार्थः[६]। बलवदनिष्टाननुबन्धित्वज्ञानस्य हेतुत्वे च भ्रमाजन्यत्वमात्रं

---

(१) अगम्यागमनप्रवृत्तेरपीत्यर्थः।

(२) शिष्टपदेनैव वारणसम्भवादिति भावः।

(३) इष्टसाधनत्वज्ञानमेव प्रवृत्तौ हेतुः न तु बलवदनिष्टाननुबन्धित्वज्ञान-मिति भावः।

(४) साध्ये बलवदितीति ग०।

(५) साध्यस्य बलवदित्यादिविशेषणघटितत्वे सतीत्यर्थः।

(६) इष्टसाधनत्वांशे भ्रमाजन्यत्वं ईश्वरज्ञानावृत्ति इष्टसाधनत्वविषयत्वा-न्तःपातिविषयताविशिष्टज्ञानाजन्यत्वमित्यर्थः ईश्वरज्ञानस्य सर्वांशे प्रमात्वेन भ्रमविषयताया ईश्वरज्ञानावृत्तित्वादिति भावः।

न च व्यभिचारः। निष्परिपन्थिश्रुत्या मङ्गलं समाप्तिसाधनमिति प्रमापिते तत्रापि तयैव लि-ङ्गेन जन्मान्तरीयतदनुमानात्। तच्चेदमारब्धकर्म्माङ्गं कर्म्मार्थितया शिष्टैस्तत्पूर्व्वं क्रियमाणत्वात् फलान्त-राभावे सति फलवत्कर्म्मारिप्समानेन नियमतस्तत्-पूर्व्वं क्रियमाणत्वाच्च दर्शे प्रयाजादिवत्।

---

वक्तव्यं। लौकिकभोजनादौ व्यभिचारवारणायालौकिकत्वे सतीत्यने-नापि विशेषणीयं, तत्त्वञ्च[१] इष्टसाधनत्वेन लोकावगतान्यत्वं, लोकश्च वेद-तदुजीविप्रमाणातिरिक्तप्रमाणमेव। यदि च श्राद्धत्वेनामावा-स्याश्राद्धत्वेन वा रात्रिश्राद्धमपि पितृतृप्तिस्वरूपयोग्यतया वेदबो-धितमिति साध्यसत्त्वादन्यथा तु चैत्यवन्दनादिवन्निष्फलत्वेन पाप-जनकतया हेत्वसत्त्वादेव न तत्र व्यभिचार इति विभाव्यते, तदा तु लोकावगतेष्टसाधनताश्रयान्यत्वमलौकिकत्वं, तथा च पश्वादिकृतत्व-याचेष्टायां व्यभिचारवारणायैव शिष्टेति तत्र निरुक्तमेवेत्याहुः। तदुभयमपि 'स्वीकृतवेदप्रमाणभावः शिष्टः' इत्यग्रिममूलविरुद्धत्वाद-श्रद्धेयम्।

'न च व्यभिचारः' इति प्रमत्तानुष्ठितसमाप्तौ व्यभिचार इत्यर्थः। तथा च विषयबाधेन वेदजस्यज्ञानस्य भ्रमतया कुतो वेदस्य तत्र प्रमाणत्वमिति भावः। 'निष्परिपन्थीति शाब्दबोधविघटकासमव-

---

(१) अलौकिकत्वञ्चेत्यर्थः।

